**आर्तव—** ऋतु- द्र.

**आर्ति—, आर्तोस्** (:) आ (आ√*अ <>ऋ)र्, च्छे द्र.

**आर्त्नी**[a]— -त्नियोः[b] तै ४, ५, १, ३; –र्त्नी ऋ ६,७५,४; १०,१६६, ३; मा २९,४१; का ३१,२,४ तै ४,६,६,२; मै ३,१६,३; काठ ४६,१; शौ १,१,३; पै १,६,३; १५,१०,४; –त्न्योः[b] मा १६,९; का १७,१,९; मै२,९,२;काठ १७, ११; क २७,१; पै १४,२,१३.

**आर्त्विजीन—,** आर्त्विज्य- ऋतु- द्र.

**?आर्त्व्युः**[c] शौ ८, १३, ३ : पै १६, १३५,१.

**¶आर्द्र,द्रा**[d]— -द्रैः मै ३, ९, ६; काठ २६,७; क ४१, ५; –द्रम् मै ३, १०, ७[e]; ४,५,९; काठ २३,९; शौ १,३२, ३$; पै १,२३,२$; –द्रस्य ऋ १,११६, ४$; तै ६, ४, १, ५[e]; –द्रां तै ४, ४, १०, १$[f]; मै ३, ४, ७; काठ ८, २; २६, ७; क ६, ७; ४१, ५; शौ १९,७,२$; –द्राः तै ६,२,११, २; $मै २,७,१५; ३,४,७; काठ २७, १[?]; ३९,३$; क ४२,१[?]; –$द्रात् ऋ २, १३, ६; –द्राम् $खि २,६,४;१४; $खिमा ११, ४;१३;१४; तै १,६,११,३; –द्रे तै २, ५, ८, ३; ७, ५, ९, ३[g]; –द्रेण मै ४,३,४.

**आर्द्र-दानु**[h]— -नवः काठ २,१; क १, १३; –नु[i] तै ४, ४, १२, ३; मै ३,१६,४; काठ २२, १४; –नुः मा १८,४५; का २०, २, ८; तै ४,७,१२,३; मै २,१२,३; ३,४, ३; काठ १८, १४ : क २९, २ : शौ १६,३,४.

**आर्द्र-पवि**[j]— -विः शौ १६, ३, ४.

**आर्द्र-पवित्र**[k]— -त्रः शौ ९,७, १०[?]; पै १६,११३,५.

**आर्द्र-ह(स्त>)स्ता**[l]— -स्ता शौ १२, ३,१३; पै १७,३७,३.

**आ(आ√ऋ)र्घ्**, आ···ऋध्याः[m] ऋ ३,५०,१.

**आ(आ√*अ)र्पृ>र्पि**[n], आर्पयन्ति तै ३,२,४,३[?].

**आर्पित**[o]— -तः शौ ६, ११२, ३[p]; १०,७,१४[q]; पै १,७०,४; १७, ८, ५; १९, ३३, १०; –तम् शौ १०,८,६;१०,३३; पै १६,१०१, ९; –ता ऋ १, १६४, १४; शौ ११, ७, ९; १८,२, ६[r]; पै १६, ६७, ४†; १५१, १०; १५३, ८; –ताः शौ १०, ७, १२; १३, ३, १०[s]; पै ४,३, १[t,s]; १७,८, ३; –तानि शौ ८,९, १९[?]; १८,१, १७; पै १,९१,४.

[a]) नाप. (धनुष्कोटि-) । व्यु. ? पपा. नावग्रहः । या ⌊९, ४०⌋ GW. <आ√ऋ (हिंसायाम्) इति, सा. दे. (निघ ५, ३)<√आर्त्<√ऋ इति, दे. (पक्षे)<√आर्त् <√रिष् इति ।

[b]) सपा. °त्नियोः(नीउ २,८ च)<>°त्न्योः इति पाभे.।

[c]) पाठे ? (दिति->) दैत्यः इति शोधः (तु. पै. मूको.: वैतु. पपा. प्रभृ. यनि. पठन्तः ?) ।

[d]) विप. (चर्मन्-, दारु-, पृथिवी-, प्राण- प्रभृ.)। नाप. (नक्षत्र-विशेष- ⌊तै. शौ.⌋) । व्यु. ? पपा. नावग्रहः । <√अर्द् इति पाउ २, १८ प्रभृ., <आ√अर्द् इति अभा. ?। वा (नैप्र.<>*भा)र्=आर्+(√ध>*ध्र->)द्र- इति कृत्वा कास. प्रकृतिस्वर इति तु विमृश्यम् ।

[e]) सपा. °द्रम्<>°द्रस्य इति पाभे. ।

[f]) सपा. मै २,१३,२० काठ ३९, १३ बाहुः इति पाभे. ।

[g]) सपा. काठ ३४,५ पाठाभावः ।

[h]) विप. (२अप्-, क्षत्र-, वायु- प्रभृ.) । नाप. (वायु-) । बस. पूप. प्रकृतिस्वरम् (तु. W.; वैतु. सा. प्रभृ. उस. उप. <√दा ⌊दाने⌋ इति) ।

[i]) सपा. पै १५, १, ८ दान्वोजः इति, आश्रौ ४,१२,२ आर्द्रदानुम् इति च पाभे. ।

[j]) नाप. (सूर्य-रथ-) । बस. पूप. प्रकृतिस्वरम् ।

[k]) विप. (एतद्-) । शिष्टं j टि. द्र. ।

[l]) विप. (दार्मी-) । शिष्टं j टि. द्र. ।

[m]) तु. सा.; वैतु. वें. ?, PW.GW. ग. अभाव इति ।

[n]) तु. टि. √ *अर्पृ>अर्पि ।

[o]) व्यु. ? पपा. नावग्रहः । पृ ४२५ e संदेहः समकेति तद् यत्रापि आर्पित- इति श्रूयते तत्र सर्वत्र =आ-अर्पित- इति द्र. । यत्र च अर्पित- इति श्रूयेत तत्र तद् *आर्पित- >नैप्र. विपरिणतमिति द्र. । ऋ १, १६४, ४८ इत्यत्र श्रूयमाणम् अर्पित- इत्यत्र लिङ्गं द्र. (वैतु. पा ⌊६,१,२०९⌋ अत्र समाधिगानुशासनम् ) ।

[p]) तु. सस्थ. उत्-सित- इति ।

[q]) तु. सस्थ. समा-हित- इति ।

[r]) सपा. ऋ १०,१४,१६ काठ ४०,११ तैआ ६, ५, ३ आपश्रौ १७,२१,८ आहिता इति पाभे. (तु. पृ ६५३ f टि.)।

[s]) सपा. काठ ३७, १ तैब्रा २, ७, १५, ३ तैआ १, ७, १ अर्पिताः इति पाभे. ।

[t]) पृ ४२५ अ° इत्यत्र यनि. शोधः ।

**आर्भव-** ऋभु- द्र.

**आर्य**[a]– -र्यः ऋ ५, ३४,६; ८,५१,९; १०,३८,३; १३८,३; खि ३, ३, ९; मा ३३, ८२†; का ३२, ६, १३†; काठ ३४. ५¶; कौ २, ९५९†; जै ४, १९, १†; शौ ४, २०, ४[b]; ५, ११, ३; १९, ४५, ४?[c]; पै ३, १३,८; ८, १, ३; १५,४,४?[c]; –र्यम् ऋ १, १०३, ३; १३०, ८; १५६, ५; ३, ३४, ९; ९, ६३, ५; १०, ४३, ४; ४९, ३; ८३, १; ८६, १९; खि ५, ५, ११; काठ ३४, ५¶; †शौ ४,२०,८$; ३२, १; २०,११,९;१७,४;१२६,१९; पै ४,३२,१;८, ६, ८; –†र्यस्य ऋ ७,१८,७;८,१०३,१; १०,१०२, ३; कौ १,४७; २, ८६५; जै १, ५,३;४,२१,३; पै २०, ५१, १; –†र्या ऋ ४,३०,१८; ६,३३,३; ६०, ६[d]; ९,६३, १४; १०,६५, ११; ६९, ६; कौ २, २०५[d]; जै ३, १८,१२[d]; –र्याः ऋ ७, ३३, ⌊७(१०१,१)⌋; १०, ११, ४; शौ १८,१,२१†;पै९,१०,५;–र्याणि ऋ ६, २२, १०; ७, ८३, १; शौ २०,३६,१०†; –र्यात् ऋ ८,२४, २७[e]; –र्यान् ऋ १, ५१, ८; पै २०, २४, ८; –र्याय ऋ १,५९, २; ११७,⌊२१;७,५,६⌋; २,११, १८; ४, २६,२; ६, १८,३: २५, २[f]; मै ४,१४, १२†; शौ १९, ३२,८; पै १२,४,८;१९,३४,३; ५०,१३; –र्ये शौ १९,६२,१; पै २,३२,५; –र्येण ऋ २,११,१९.

¶आर्य-क्र(त>)ती[g]– -ती मै १,८,३

**आर्यन्ति** आ(आ√*अ)र (पूजायाम्) द्र.

**?आर्वा** पै २०,४१,३.

**आर्श-** ऋश- द्र.

**आर्श्य-** ऋश्य- द्र.

**आ(आ√अ)र्षु**, आ…अर्षति[h] ऋ ९, ९७,१३[i]; ‡आ…अर्षसि[h] कौ २,१५६; जै ३,१५,४.

**आर्ष-,आर्षेय-** ऋषि- द्र.

**आर्ष्टिषेण-** ऋष्टिषेण- द्र.

**?आर्ष्य** पै १५,१७,८.

**१आल**[j]–

आला(ल-अक्त>)क्ता[k]– -क्ता ऋ ६, ७५,१५.

**?२आल**[l] शौ ६,१६,३.

**आलक**[m]– -कम् पै ९,१०,१०.

**?आलका-** -का पै ८,२,६?[n].

**आ√लप्**

?आ(?आ)-ल(?त)पत्[o]– -पन् शौ ८, २,३; पै १६,३,३.

आ-लाप– -पाः शौ ११,१०,२५: पै १६,८७,५.

**आ-लब्ध-,°लब्धि-** आ√लभ्,म्भ् द्र.

¶**आ√लभ्,म्भ्**[p] (वधा.), >म्भि,

¶आ_लभते तै २, ५, ५, ३; ५,

[a]) बप्रा. । विप. (ऋ ३,३४,९ प्रभृ.), नाप. (ऋ १, ५१,८ प्रभृ.) च । व्यु. ? <अर्य- (<√ऋ इति ⌊पा ३, १,१०३⌋) इति या ⌊६,२६⌋ । आ + (√ऋध् ⌊वधा.⌋> क्यपि भाप.) ऋध्य- > (बस.) *आर्ध्य- > नैप्र. यनि. इति तु मतम् ।

[b]) सपा. पै ८,६,८ विशिष्टः पाभे. ।

[c]) पपा. अनु यनि. ? । अर्यः इति पाठः संभाव्येत (तु. ऋ १०,३४,१३ मा. अर्य ⌊सं१⌋ ? इति; वैतु. W. चार्यः ⌊च आ°⌋ इत्यस्य स्थाने वार्यः ⌊वा आ°⌋ इति) ।

[d]) सपा. शौ ७,११५,१ तैब्रा २,४,५,७ पै २०,१४,७ अप्रति इति पाभे. ।

[e]) ORN. वार्यात् इति पदमेकं चिकीर्षति ।

[f]) अर्या° इति Pischel ⌊ZDMG ४०,१२६⌋ शोध-प्रस्तावः स्पष्टेतर इति (तु.ORN.) ।

[g]) विप.(स्थाली-)। तृस. अन्तोदात्तः (पा ६,२,१४७)। स्त्री. ङीप् (पा ४,१,३०) । विशेषस्तु Sch. टि., वैप४⌊यद्र.⌋ ।

[h]) सपा. °र्षति <> °र्षसि इति पाभे. ।

[i]) 'इमां स्तुतिरूपां वाचं प्रचेतयन्नाऽर्षति (आगच्छति)' वा. द्र.(वैतु. वें., सा. यनि. इति कृत्वा ⌊तु. मुं.⌋ असंबद्धमिव ण्यर्थं प्रत्यायुक्तौ, GW. स्त्राअ. आ इति च) ।

[j]) नाप. (विष-? ⌊तु. मा. GW.⌋) । व्यु. ? ।

[k]) विप.(इषु-) । तृस. पूप. प्रकृतिस्वरम् ।

[l]) पाठः ? छन्दस्तोऽक्षरयुग्मेनोनः पाद इति कृत्वा निर् (अपेहि),१आल–> ? *आल(–गर्भः) इति पदद्वयं संभाव्य तत्परः शोधः स्यात् ? (तु. पपा. द्वे पदे; वैतु. पै १९,५,९ पाठाभावः, कौसू २५, १८ ⌊तु. भू ४७⌋ आल– =लता विशेष- इति, सा. W. *निराल–=अक्षिरोग-विशेष- इति च)।

[m]) विप. (१आल-) । व्यु. ? <√*अर्, ल् (हिंसा-याम्) इति विमृश्यम् ।

[n]) पाठः ? । नाप. (सर्प-विशेष-) । शिष्टं m टि. द्र. । सपा. शौ ५, १३, ७ आलिगी इति पाभे. अनु आलिका इति शोधः स्यात् ? ।

[o]) पाठे ? यनि. शोधः (वैतु. पपा. अनु पृ ४३५ b टि. अ-ल° इति निर्देशो नेष्टः) ।

[p]) तु. पा ७,१,६४;६५ ।

५,१,८,३;६,१,११,६[२]; ६,७,३; ४[२];मै१,५,१०;आलभते मा २४, ११[a]; १६; २०-२९;३०,२२;का २६,३,१[a];४,१;५:५,१-५;६,१-४: ३४,४,४; ¶तै १,६,७,२; ७, ६,७;८,१९,१; २१,२; २,१,९ ३:३,१,५,१;४,३,१; ४; ५, १, ३;४; ५, १,८, २[b];५,१,१[c]; ६, ३,७,५; १०,१; ६, ५,२;३[२]; ४; ¶मै १,४,५; १४;१५; ५, ९[d]; ७,४; २,१,१०;२,९;५,१;३,३, ९;६,२;४;५;७;९; १०;७,८;९; ९,६[४]; १३,१४$; $१४,१-१०; ४,५,३;८,६; काठ १०, ५; १२, १३[२];२२,१३[३];२३,१; २[२]; ३[४]; ४[३]; आलभते ¶काठ ८,१: ११; ९,२[e];३;१०,१[२];९;११,४;१२, ३;१३, ५; १२; १८,१९[f];१९, ८; ९[f]; २१, ७; २३,५[३]; २४, ७[२];८[g]; २६,७[२]; ८[२]; २९,२; ४; ३०, ३; ९[३]; ३१,१२; १५; ३२, ६;५०,४; ¶क ६,६;७,८; ८,५: ६;२९,७;३०,६;३५,७;८[२];३६, १[३]; २[२]; ३७, ८[२]; ४१, ५[२]; ६[२]; ४५,३; ५;४६, ६; ¶आलभन्ते तै ७,५,६,३;७,४; मै १,४,१५; २,४,२[२h]; ३,९,५;७; काठ ३४, १[i]; आलभे शौ ७, ११४,७; पै ४,९,६; आलभे[j] काठ ४, १४; ३१, १५; आलभामहै मै २, ५, २[२]¶[k]; ¶आलभत तै २,१,१,४; २,१;३,१;४,६;९,१; मै २, १, ८;५,३[४]; ५;६;१०; ११[४]; काठ १०, ११; १३,२; ४[२]; ५; १३[३]; २९, ९; आलभेताम् मै २, ५, ९¶; ¶आलभन्त तै २,१,२,३; ४;४,१; ४;८,१; ३,५,१,३; ६, ३,५,१; मै २, ५, २;३; ३, ६, १०[२]; ९, ५; १०,२[७]; काठ १२, १३[२];१३,५; १४,९: ¶आलभेत तै २,१,४,६;३,५,१,३;५,१,८, २;६,६,५, ४; मै २, १,३; आलभेत तै २.१,१,१[२];२[२]; ३; ५: ६;२,१; ४[२]; ५:६:७[२]: ८;९; ३, १[२];२;३[२];४; ५[२]; ४,१[२]; ३[२];५- ८;५,१;२[२]:३;४: ५[२];७: ६,१[२]; २[२];३; ४[२];५,७,२-४; ५[२];६;७; ८, १: २; ३[२]; ४; ५; ९, १-४: १०, १-३; ५, ७,४; ३,४,३,२: ३[२]; ४; ५,१,३[२]: ६,६, ५,३; मै २,५,१[७];२[७];३[७];४[७];५[७];६[४]; ७[७]: ८[७]:९[४]:१०[७];११[७]; ३,१, १०[c]; ४,८,६[३]: काठ १२,१३[८]; आलभेत काठ ८, ११:१२, ८; १२[h]; १३, १[४]:२[२]; ३[९]; ४[८]; ५[७]; ६[८]; ७[७];८[९];१२[६]:१३; १९,८;२२,७; २४,७; २९,१०[२];३१,१५: ३४, २; क ७,८:३०,६;३५,१; ३७, ८; ४६,३[२]; आलभेरन् काठ३४, १[८]¶; आलभेय काठ १३, ४¶.

आलेभे मै १, १, ६[l]; ४, १, ६; आलेभिरे शौ १०,१,९; पै १६, ३५,९; आलप्स्ये[j] मै १,४,१:५; आलप्स्यामहे तै २,१, २, ३¶[k]; ¶आलब्ध मै १, ४, ९; ६,८[२]; ९,५[४]; ८[३];१०, १८; २, २,९[२]; ३, १,१[२f]; ६; ७; १०[f]; २, ३; ६; ९[२]; ३, ६ ; ४, ४; ६ : ५, २; ६, १[४]; ४[२]; ८[७]; ७, १: ४; ६; ९; ४, ३, १; ७, २; ८, ५: ६; काठ ८, ११; १२, १२[h]; क ७,८; आलब्धाः मै ४,८,१¶. ¶आलभ्युते तै ५,४,१२, २: मै ३,९,६[२]; ७;८;१०,१[२];४,७,८: ¶आलभ्यते तै ५, ५,१,१;२: मै २,३,१;५,२[२];३,६,१;१०,१;३; ४,३,६;७,८;८,१०[२]; काठ २३, २; ¶आलभ्यते काठ १३, १२[३]; १९,८[२m];२३,५;७[२];२४,७[४];८; २६,७; ८; २९,१०; ३०,५; क ३६,२; ४[२]; ३७, ८[४]; ३८, १[२g]: ४१,५;६; ४६, ३; ¶आलभ्युन्ते तै ५,५,१,१; मै २, ५, १०;४, ७, ९; ¶आलभ्यन्ते तै २,१,४, २; ५, ४, १२, २; ६, २२,१[२]; मै १, ११, ९; २, ५, १०[२]; ३, १, १०[b]; १०, १; ४, ७, ९; ¶आलभ्यन्ते काठ १४, ९; १९, ८[२b];२९,८[३];५०,२[२];क ३०,६[b]; आलभ्यन्त मै २, ५,१०¶.

a) सपा. मै ३,१३,१९ विशिष्टः पाभे. ।

b) सपा.°भते<>°भ्यन्ते इति पाभे. ।

c) सपा. °भते<>°भेत<>°भ्यते इति पाभे. ।

d) सपा. काठ ७,७ पराहन्ति इति पाभे. ।

e) °भेत इति पाठः शोधार्हः (तु. सपा. क ८,५) ।

f) सपा. °लभते<>°लब्ध इति पाभे. ।

g) सपा. °भते<>°भ्यते इति पाभे. ।

h) सपा. °भन्ते<>°भेत<>°लब्ध इति पाभे. ।

i) आलभन्त इति SI. चिन्त्यः ।

j) सपा. °भे<>°प्स्ये ( माश्रौ १,४,१,६ च ) इति पाभे. ।

k) सपा. °भामहै<>°प्स्यामहै इति पाभे. ।

l) सपा. मा १, १३ पराजघ्नुः इति, का १,४,४ काठ १,५ क १,५ पराजघान इति च पाभे. ।

m) ६ टि. द्र. । यत्तु SI. द्विः प्रस्या° इत्याह तच्चिन्त्यम् सपा. तै ५,५,१,२ प्रस्या° इति पाठोपलब्धेः ।

¶आलम्भयति तै २,२,२,२; ५, ४,५: ६,१,४,६; मै १,८,९;२, १,१०.

¶आ-लप्स्यमान- -नः मै १, ४, १४[a]; २, ५, ९; काठ ९, १६[२]; १०,१.

आ-लब्ध,ब्धा- -¶ब्धः तै ३, ४, १, १; मै ३, १०, ७; ४, ७, ८[२]: पै ९, १७, ३६[b]: -ब्धम् ऋ १०, ८७, ७[c]; तै ६, ३, ५, २¶: काठ २६, ४[२]¶: क ४१, २¶: -¶ब्धस्य तै ३, ४,१, ३; ६,३,९,१: १०,२; ३: ४, १, ४; काठ १३,१०: -ब्धाः मै ३, ९,५¶: -ब्धाय तै ५, ७, २०,१; ७,४, १६, १; काठ २६, ७¶: ४४, ५; ५३, १०; ¶क ४१,५; -ब्धायाम् ¶तै ३, ४, ३, ७: ८: -ब्धे मै १, ५, १०¶.

¶आ-लब्धि- -ब्ध्यै काठ २६,४; क ४१,२.

आ-लभम् मै ३,१०,२.

¶आ-लभमान- -नः तै १,६,१०,३; ३, ४, ३, १;५,१,३[a]; मै १, ४, १५.

¶आ-लभ्य तै ५,७,१,२; ६, ३, ५, १;२;१०,१;५,१,५;६,५,३; ७, ४,१०,१; मै १,४,१०;१४; २, ३,५: ३,६,२: ४, १,४[२]; ३,९[२]; ४,६;१०; ५, १[२]; ६; ६, ५[२]; ८; काठ ८,१०; ९,१६[३]; २२, १३: २६,५; २७,१०; ३३,२[२]; क ७, ६: ४१,५.

¶आ-लभ्य,भ्या- -भ्यः मै २,३,१; ३,६,५$;९,५[२]; ४, ३, ६; काठ २३,२; २४,८; क ३५,८; ३८, १; -भ्या मै ३,९,५: -भ्यौ मै १,४,१५.

¶आ-लभ्यमान- -नम् काठ २४,७; ३०, ९: क ३७, ८: -ने मै ३, १०,२.

¶आ-लम्भ्य[d]- -म्भ्यम् तै ६,३,५,१

आ-लेभान- -नात ऋ १०, ८७,७[e];

¶?आ-लम्भम्[f] काठ २२, ८; क ३५, २.

?आलाद्य[g]- -द्याय तै ४,५,८,२.

आ-लाप- आ √लप् द्र.

?आलि(कं>)गी[h]- -गी शौ ५, १३,७.

आ √लुप्>म्प्, आलुम्पसि पै ७, १२,९; आलुम्पामि पै २०,४०, १०; आलुम्पेत् शौ १२,४,३४; पै १७,१९,४.

आलोभी काठ (पुष्पि) ७.

?आल्वन्तरोटं[i] पै ४,१६,४.

आ(आ √अ)व्, आ···अवन्तु[j] ऋ ७, ३६,६+७.

ϕआ(आ-अ)विष्यत्- -ष्यन् ऋ १, ५८,२[k].

आ(आ-अ)व्य>व्या[l] ऋ १, १६६,१३.

आव[*] अस्मद्- द्र.

आवः,आवः वि √वृ(आच्छादने) द्र.

आ √वक्ष्, ‡आववक्षत[m] कौ १,६४; जै १,७,२.

आ √वच्, आ···वोचत् जै १, ११, १‡[n]; †आ···वोचे[n] ऋ १, १५०,१[o];७,७३,२; कौ १, ९७;

---

[a]) सपा. °प्स्यमान.<>°भमानः इति पाभे.।

[b]) सपा. शौ ५,१८,४ आरब्धः इति पाभे.।

[c]) सपा. शौ ८, ३, ७ पै १६, ६, ७ आरब्धान् इति पाभे.।

[d]) गस. ण्यदन्ते उप. निस्स्वरः प्रकृत्या।

[e]) पृ ६९४ *g* टि. द्र.।

[f]) पाठे? आ-लभम् इति शोधः द्र. (तु. सपा. क. मूको., मै ३, १०, २, OK. २२, तै ५, ७, १, २ आलभ्य इति, तांत्रा ३, ६, २ आलम्भम् इति च पाभे.; वैतु. र. काठ. पाठम् अनुसरन् यनि. पाठ इति)।

[g]) प्राति. व्यु. च? ⌊अलम् √अद्>⌋ *अलाऽद्- ⌊=जीव-⌋>तद्धित इति सा., =आ √ल(<र)द् ⌊शब्दे⌋> *आ-लाद्य- ⌊=समुद्र-⌋ इति PW. प्रमृ.। *आ-(ह्ना>) लाद्- [=आ-ह्लाद्-=ह्लाद्-=हृद्- (=हृदय>हृदय्य- ⌊मा १६, ४४⌋)] >यदन्तस्तद्धित-स्तित्स्वरश्चेति विमृश्यम्।

[h]) पाठे? यनि. शोधः? (तु. टि. आलका)। व्यु.? <√*अर्, ल् (हिंसायाम्) इति विमृश्यम्।

[i]) पाठे? मन्त्रोऽयं इति शोधः? ।

[j]) 'यत् (यदा) सरस्वत्यादयो नद्यो मरुतश्च नः धियं तोकं च साकम् आऽवन्तु' (तदा) मा नः इत्यादिके उत्तरस्य मन्त्रस्योत्तरार्धे संबन्धः द्र. (वैतु. वें. सा. GRV. Gri. आ ⌊गच्छन्तु⌋ क्रिउ. इति)।

[*]) वैतु. वें. सा. आ···तिष्ठति इति, GW. आ··· युवमानः इति च (पृ ४४३ सस्थ. √अव्>अवि° इत्यत्र शोधः द्र.)।

[l]) वैतु. पपा. नावग्रहः।

[m]) सपा. ऋ १०,११५,१ ववक्ष इति पाभे.।

[n]) सपा. °वोचत्<>°वोचे इति पाभे.।

[o]) वैतु. या. ⌊५,७⌋ प्रमृ. अनुपसृष्टवादिनः नि. उपयोगं

आ···वोचम् ऋ ५,४१,१४[a].
ओ(आ-उ)क- -का ऋ १,६३,९.
**आ√वञ्च्**, †आवच्यस्व ऋ ९, २, २; ९७, २; १०८,१०; कौ २, ३६२; ३८८; ७५०; जै ३, ३०, ५;३१,८.
**आवत्** अस्मद्- द्र.
**?आवत्** पै १५, ६,६; २०,३४,४.
**आ-वत्**[b]- -वतः शौ ५, ३०, १[3c]; पै ९,१३,१[2].
**?आवतंकरणीदसी**[d] पै १, १००,२.
**आ-वत्सर**[e]- -रम् पै १६,७२,४.
**आ√वद्**, आवदति मै ३, ८, ७¶; आवदामि शौ ८, ७, ४; १२, १, २९; पै १,६६,३, १६, १२, ४; १७, ३, १०; आवदामसि पै १, ९३, २[f]; आवदासि ऋ १०, ८५,२६; शौ ८, १, ६‡[g]; १४, १,२०†; २१‡[g]; पै १६, १,६; १८, २, ९; १०‡[g]; आवदः पै १९,४८,१; आवदाथः[g] ऋ १०, ८५,२७; आवद ऋ २,४३,२[2]: ३: खि २,२,३;५;१६,१; मा १, १६; का १,५,५; तै १,१,५,२[2]; २,१३,१[h];६,२,९,१[h]; मै १,१, ६[3];२,६[h]; ३,८,७¶[h]; ४,१,६[3]; शौ १,१०,४; ४,१५,१४; पै १, ९,४; ५,७,१३; १०,३,६; २०, २७, १०; आवदतम्[h] मा ५, १७; का ५, ५, ५; आवदत ऋ १,६४,९; आवदानि मा २६,२; का २८,१,२; शौ ६,६९,२; ९, १,१९; पै १०,६,४;१६,३३,९; १९,३२,१४; २०, २८, ९; आवदेम ऋ ⌊१,११७,२५; २,१२, १५ (३९,८) ८, ४८, १४⌋; शौ १२,२,२२;३०: २०,३४,१८†; †पै १३, ७, १६: १७, ३२, २; १०.
ओदिम मै ४,१४,१७[4l].
†**आ-वदत्**- -दन् ऋ १,११,६; २, ४३, ३: खि २, २, ५: जै ३, ४८,१८.
**आ√वध्**, †आवधीत् ऋ ८, ७२, ४[j]; ७५, ९: तै २, ६, ११, २; मै ४,११,६; काठ ७, १७; आवधिष्ठाः खि २,११,३.
**आ√वन्**, आ···वनते, (आ)वनते[k] ऋ ५,४१,१७; आ···वनमे ऋ १,१४०,११.
आवव्ने ऋ ५,७४,७; †आवंमते[l] ऋ ८, १०३, ९; कौ २, २२९; जै ३,२०,१३; आवंसत् ऋ १०, २६, २; आवनिषीष्ट ऋ १, १२७,७.
**आ√वप्**. ¶आवपते मै ४. ३. १: काठ २२,१३: ¶आवपति मै १. ८, १०: काठ १५, ५[m]: २८,९; ३२,७; क ४४,९:¶आवपन्ति मै २,६,६[m]: पै १९,४२,१०; आवपतु मा ३५,५; का ३५,४,५; आवप शौ ११,१,२३:२९:३२; पै १६, ९१,६;९;९२,२: ¶आवपत् काठ २८, ९: क ४४, ९: आवपेत मै ४,३,१.
ओपिथे ऋ १,३१,९.
**आ-वपन**[n]- -नम् मा २३. ९: १०: ४५; ४६: का २५,३,६:७:९,१: २; तै ७. ४, १८,१.२: मै ३, ३,१¶;१२,१९[2]; काठ ४४.७[2].
**आवपनी**- -नी शौ १२. १, ६१; पै १७, ६,१०.

प्रति पर्यनुयोज्याः ।

a) 'दैव्यानि पार्थिवानि जन्म(=जन्मानि)अपः(=जलानि) (च स्तुत्यत्वेन) अच्छा (=अभिलक्ष्य) सुमखाय (सुयज्ञस्य ⌊सुधनस्य वा⌋ सिद्धये) आ···वोचम् (=स्तुतिमकार्षम्)' इति वा. इति कृत्वा यनि. अन्तर्हितकर्मकं क्रिप. द्र. (तु. GW.; वैतु. सा. अच्छा इति कप्र. संकेतयन्नपि वा. प्रति चिन्त्यः) । पृ ५५ अच्छा···वोचम् इत्यत्र शोधोऽपेक्षितः । स्तुतिकर्मणां धा. अकर्मकत्वविमर्शः पृ ३१७ *i,o* टि. कृतः द्र., तत्रापि विशेषतः तु. ऋ ८, ६९,४;९२,५ ।

b) स्त्री. । धात्वर्थे वतिः प्र. (पा ५, १, ११८)। प्र. स्वरश्च ।

c) प्रथमे पादे पाठे ? सकृत् परा-वतः इति शोधः (तु. सपा. पै.) ।

d) पाठे ? यथा त्वा पर्युत-सर्क पत्नि ! औषधम् आ-वर्नकं रगोयसी->-०मि इति पूर्वार्धर्चे-शोधः? ।

e) अप. वा. किवि. ।

f) तु. पस्थ. टि. ?कामदः ।

g) सपा. °वदासि (आपमं १,९,४ च) <> °वदाथः इति पाभे. ।

h) सपा. आवद <> आवदतम् इति पाभे. ।

i) सपा. कामा १२५:१-४ ऊदिम इति पाभे. ।

j) तु. वें. GW.; वैतु. सा. ग. अभावः ।

k) तु. GW. ; वैतु. सा. यनि. सपा. अनुसमृष्टान् सतः धा. रूपाद् अविवेचुकः ।

l) लेटि प्रपु१ रूपम् ।

m) सपा. °पति <> °पन्ति <> तै १, ८, ९, ३ विचिनुयात् इति पाभे. ।

n) नाप. (क्षेत्र-, पात्र- प्रभृ.) । गस. अधिकरणे ल्युडन्तम् उप. प्रकृतिस्वरम् ।

आ-वप(त्>)न्ती–
आवपन्ति(-कृ>)का[a]– -का[b] शौ १४,२,६३; पै १८,१३,२.
?आवपम्[c] पै ४,४०,४.
¶ओ(आ-उ)प्य काठ १२,३.
ओ(आ-उ)प्यमान– -नाः शौ १२,३,२८.
आ√वय् (*स्तुतौ), ?आ… वयः[d] कौ १,३५३; जै १,३७,२.
आ-वय[e]– -यम्[f] शौ ८.६,२६: पै १६,८१,७.
आवयः, आवयः, आवयत्, आवधत् प्रभृ. √अन् द्र.
?आ वयम्[g] पै ९,१०,६.
†आ-वयस्[h]– -याः ऋ १,१६२,५: मा २५,२८; का २७,१२,५: तै ४,६,८,२; मै ३,१६,१: काठ ४६,४.
?आँ-वर[i]– -रान् ऋ २,३४,१४.
?आवरव्रजत[j] पै ६,२,८.
आवरीवः आ√वृत् द्र.
आवरीवुः आ√वृ (वरणे) द्र.
आ-वर्तक–, °र्तन–, °र्तमान–,°र्तयध्वै, °र्त्स्यत्–, आ-ववृतत्–, आ-वर्वृतत्- आ√वृत् द्र.
आ-वर्हम् आ√वृह् द्र.
आ√वल्
आ-वलत्– -लते तै ७,१,१३,१.
आववृध्वम् आ√वृत् द्र.
आ√वस् (निवासे),>वासि, आवसन्ति[k] ऋ ७,८४,२: आवसन्तु[k] पै १,१०३,४; आ (आ-अ)-वसत्[l] ऋ १,१४४,२.
आ-वसथ[m]– -थात् पै १९,९,११[n]; –थान् शौ ९,६,७; पै १६,११९,८;११६,४.
आ√वह्,>वाहि,आ…वहति ऋ ३,५८,१; आ…वहतः ऋ ५,४१,७; खि ५,१४,४?[o]; आवहन्ते[p] मै १,१,२; ४,१,२; आवहन्ति ऋ ३,५५,१८[q]; तै १,१,२,१: आ…वहन्ति ऋ ८,७,३५: आ…वहन्ति[r] ऋ ७,६६,१५: ७८,४; ¶तै ६,१,११,६; आवहेथे ऋ ८,५,३१; आवहथः खि १,८,३: आ…वहथः ऋ १,११९,३;

[a]) स्वार्थे के प्र. अणो ह्रस्वः प्र. स्वरश्च।

[b]) =सपा. आपमं १,५,२ शांगृ १,१४,१ पागृ १,६,२ मागृ १,११,१२। मंब्रा १,२,२ हिगृ १,२०,४ तु आवपन्ती इति पाभे.।

[c]) पाठे ? आ-वपत्–>–पन् इति शोधः।

[d]) यनि. रूपं लङि मपु१ (वैतु. पपा. अनु भ. PW. BSG. १६५ वयोवयः-शयुम् इत्येकं पदमिति, सा. वयः (=अन्न-⌊तु. BSG.⌋), वयस्य!, अयम् इति त्रिपदमभिप्रयन् यनि.द्वि१ इति; आ इति च सा. भ. आ ⌊हर⌋ इति क्रिउ.)।

[e]) भाप.। अर्थः व्यु. च ? नैप्र. <आ-वह्- इति विमृश्यम् (तु. सस्थ. रोद–, अघ–)।

[f]) सपा. मंब्रा १,१,१४ आपमं १,४,११ हिगृ १,१९,७ विशिष्टः पाभे.।

[g]) पाठे ? आ√भृ>(लङि) आभरत् इति शोधः (तु. सस्थ. टि. ?त्वामृत, ?तन्वारोपयस)।

[h]) नाप.(ऋत्विग्-विशेष-)। बस. पूप. प्रकृतिस्वरम्। उप. =२वयस्–<√वी इति (तु. टि. अभि-वयस–, MW.; वैतु. वें. सा. म. ⌊पक्षे⌋ च <आऽवयज्– इति, PW. प्रभृ. <आव-याज्–<अव-याज्– इति, ORN. ⌊?पक्षे⌋ अव√या>अव-या–>आवय–>–याः ⌊प्र३⌋ इति च <आ√वी इति च)।

[i]) अवरान् इति पाठे ? यनि. शोधः इति मतम् (वैतु. पपा. अनुमरन्तः वें. सा. GW. प्रभृ.)। पृ ४६१ अवर–> –रान् इत्यत्र शोधः कर्तव्यः।

[j]) पाठः ? आ√वृध्>वर्वृध् >आ-वर्वृधत्–> -धत (प्र१.) इति कृत्वा वा. वरुण-प्रतियोगि विप. द्र. (तु. टि. आवर्वृतत्–> -ततः।

[k]) सपा. °न्ति<>°न्तु इति पाभे.।

[l]) आ-अ° इति पपा. यनि. शोधः (तु. पा ८,१,७१)।

[m]) नाप. (गृह-)। गस. उप. अथः प्र. (पाउ ३,११६) थादि-स्वरश्च।

[n]) अ° इति पाठे ? यनि. शोधः।

[o]) पाठे ? आवह इति शोधः द्र. (तु. शौ २०,१२८,१५ शांश्रौ १२,१६,२)। आवहाऽतः इत्येवं मूलतः सतो विकारः संभाव्येत।

[p]) तयावहन्ते इत्यस्य स्थाने सपा. तै १,१,२,१ तैब्रा ३,२,२,३ तु आवहन्ति इति, काठ १,२; ३१,१ क १,२; ४७,१ तद् आहरन्ति इति च पाभे., प्रथमद्वये पाभे. यलोपाभावः पाक्षिकः द्र. (तु. पा ८,३,१९ MVG ६६)। द्वितीये स्थले मुद्रितः पाठः शोधार्हः (वैतु. पपा. तया। वह° ? इति)।

[q]) वैतु. GW. ग. अभावः।

[r]) तु. वें. सा.; वैतु. GW. ग. अभावः इति व° इत्येवं निहतं क्रिप. इति च।

आ-वहत् शौ १,८,१; पै २,६६, २;४,४,८;१९,९,२[a]; २०,५४, ६; आ (वहत्) पै १०,५,१०[b]; आ-वहात् मा १८,५९; का २०, ४,२; तै ५,७,२,३[a]: ७,१; काठ १३,१५[a];४०,१३; शौ ६,१२३, १; पै १९,२८,४; आ(वहात्) शौ १९,३१, १०[b]; आवहातः ऋ ३, ३५, २[c]; आ···वहातः ऋ ३, ४३, ४; आवहान् ऋ १, ८४, १८; शौ २०, ४८, ३[d]: पै १८, २३,१; आवहासि पै २,६६,३;४: ?आ···वहाः[e] पै १,१०३,३: आ-···वहतु ऋ ७, ३७, १: आ(आ-वहतु) शौ १९,७,५[?]; आवहताम् शौ ३,२४,७; पै ८,११,३: †आ-···वहताम् ऋ ८,१,२५: कौ २, ७४२: †आ···वहताम् ऋ ८, १७, २: मै २. १३, ९: कौ २, १७: जै ३,२,८; शौ २०, ३,२: ३८,२: ४७,८: आवहन्तु ऋ ७, ४१,६;८,४६,७: †मा ३४,३९: काठ ३५,१[f]; क ४८,२[f]; शौ ३, १६, ६†: ७,८७, ६: ९,२, ११, १९, ७, ४: ५: पै ४, ३१, ६†; १६,७६,१०;२०,३२,२: आ··· वहन्तु ऋ १,१६,१:८५,६: ९२, [१८(८,१, २४)]; १०१, १०; ११८,[४; ६, ६३,७]; १८१,२; ३,४३,[६: ६,४४,१९]; ६१,२; ४,१४,४;५,३१, ९:६२,४;७५, ६: ६,४०,३;५५,६: ६९,४; ७, ६७,४: ८, ५,३३: ६५,४: १०, १४,४: ९६,१२: खि १,२, ३[g]; तै २,६,१२,६†: मै २,९,१; ४, १४,१६†: कौ २,१०८५†: †शौ १८,१,६०;२०,१३,२:२२,२; पै २०,२९,५: †आ···वहन्तु ऋ १, १३४,१: ४,४६,[३: ८,१,२४]: ३३,१४: कौ १,२४५: २,७४१: जै १, २६, ३: आ···आवहन्तु[h] शौ १९, ७, ५: †आ···आ··· वहन्तु[h] ऋ १०, ८४,३: शौ २०, ९४, ३: †आ ( वहन्तु ) ऋ १, १८१,२:८,१,२४: कौ १,२४५: २,७४१: जै १,२६, ३: शौ १९, ७,५$: आवह,>हा ऋ १,१२, [३: १०:१५,४]: १३,१:४:१४, १२: २२,९: ३१, १७: ४४, ७: ९: ४५,२: ४८,११[c]:१२: ७६, ३:९२,१५:९४,३: १४२,१:[४: ५,५,३]: २,३,३:[११:३,६,९]: ३२,३: ३,६,६: १९,४: ४,५५, [(१,९२,१३)९: ५,७९,७]: ५, ७९, ८: ६, १६, ६: [(१,१४, ६)४४]: ६४,४: ५: ७, १,२४: १०,४;१६,९;१७,२; ८,४४,९; ६०,४;९३,[२५[i](२७)]; १०२, २; १०,१,७;१६,१२; १५०,३; खि २, ६, १; २: १३-१५; मा २,१६[j]:५, १२; †१७,९; ८८; १९,७०†; २६,२०†; का २,४, ३[k]:५,४,३;१८,१,१०†;१९,१, २†: २१,४,२०†: तै १,२,१२, ३:३,१४,८†:५,५,३†;२,५,९, ३:४[?]: ६,१२,१†: ४,६,१,३†; ५.७,८,३: ६, २,८,२: मै १,२, ८:१५:५,१†;६,२[?]: १०,१८†; ३,८,५:९,६: ४,११,४†: काठ २,९: ३,५; ७,१३[?]: १९,१४; २१,१४†:२५,६: ३९,१३†; क २,३; १२: ६,३[?]; ३९,४: †कौ २, १८२: ४१६: ६९७; ७००; ७३८; १०८३: †जै ३, १४, ३; ३२, ६: ५७,१:४; ४,१२,१०; २८,९: औ १,७,१[k]:७[k]:४,२३, २:५,४,६: १८,१,५६†:५७:२, ३४: २०, १३, ४†;१०१,३†; १२८,१५[l]: पै १,३१,१;५३,१; २,९,४:६६.१:७९,४;४,३३,३: १२,९,४†: आ···वह,>हा ऋ १,२२,१०:४४,१;२५,२;४,२, ४: ५,२६,[२:७,१६,४]:५:४३, ६:७,११,५:३९,५: ८,२३,३०;

a) सपा. °वहत्<>°वहात्<>वहाति शौ ६,५५.१ इति पाभे.।

b) सपा. आ (वहत्)<>आ (वहात्) इति पाभे.।

c) तु. सस्थ. टि. उप।

d) तु. टि. √वज् > ?वज्रापव°।

e) तु. सस्थ. टि. आ।

f) =सपा. आश्रौ ५,१९,३। तैब्रा १,२,१,११ आपश्रौ ५,६,३;१४,१७,१ तु वहन्ति इति पाभे., शौ २, १३,९ च विशिष्टः पाभे.।

g) °वहन्तु इति स्वरे ? यनि. शोधः।

h) ग. आदरार्थोऽभ्यामः ( वैतु. मा. ऋ. द्वितीये श्रवणे आ पादपूरण इति. GW. उभयत्रापि स्वाभ्र. इति)।

i) सपा. कौ १, २१३ जै १, २२, १० मृडय इति पाभे.।

j) =सपा. माश १, ८, ३, १५। तै १, १, १३,२ काठ १, १२; ३१, ११ तैब्रा ३, ३, ९, ४ तु मृडय इति पाभे.।

k) सपा. पै ४,४,१;७ आनय इति पाभे.।

l) पृ ७०४ O टि. द्र.।

१०,११,[९; १२,९]; ७०,११; मा १,१७; का १,६,१; २४,४, ९†; तै १,१.७,१[a]; मै १,१, ८[a]; काठ १, ७; क १, ७; †कौ १,४०; २, ८७२; ११३०; †जै १,४,६; ४,११,८!; १८,२; शौ १२, २, ४२; १४,१,६२[b]; १८, १,२५†; पै १७,३४,३; †आ··· वह,>हा ऋ ९,६५,१७; १०, ११०,१; मा २९,२५; का ३१, ४,१; तै २,५,९,४$; मै ४,१३, ३[c]; काठ १६, २०[c]; कौ २, १८५; जै ३,१७,६; शौ ५,१२, १ : आ(वह) ऋ १, १४, ६; ५,४३,६[d]; ६,१६,४४; आवह- तात् ऋ १०, २४, ५?[e]; शौ ६, ८२,२; पै १९, १७, ५; †आव- हतम् ऋ ३, ५३, १; ८, ५, १५, खि ५,७, ४, ८; काठ २३, ११; कौ १, ३३८; तै १, ३५, ७; आ···वहतम् ऋ १, ३४, १२; ९२,[१७;१५७,४]; खि १,७,६; १२, १; कौ २, १०८६; आ··· वहतम्, आ(वहतम्)[२] ऋ ५,४२, [१८; ४३,१७; ७६,५; ७७,५]; आ···वहत>ता ऋ ८, २०, २३; आवहानि पै १९, ४९, ४[f]; आ···वहानि ऋ १०,५२,१; आ (आ-अ)वहत् ऋ १०,५९,१०[g]; शौ ११, १०, १; १६, ८५, १; आ(आ-अ)वहन् शौ ११,१०,४; पै १६, ८५, ४ : आ···अवहन्, आ (अवहन्) ऋ १, ५१, १०; आ( आ-अ )वहः[k] ऋ ८, २४, २८ : मा ८, १९ : का ९, ३, ५; तै १, ४, ४४, २: मै १, ३, ३८ : काठ ४, १२; क ३, १०; शौ ७,१०२,३; पै २०,३४,३: आ···वहेथाम् ऋ ७,७१, ३. †आ-वक्षि[h] ऋ १, १८८, ३; २, ३६,[४ (५,२६,१;६,१६,२; ८, १०२,१६)]; ३,१४,२; ६,४७, ९;८,५४,६[i]; १०,३,७; शौ २०, ६७, ५; †आ···वक्षि[h] ऋ ३,४, १;७,९; ५, १,[११;४,४]; २६, [(२,३६,४) १; ६, १६,२; ८, १०२,१६];४३,१०;६,१५,१८; १०,७०,३; ७३,४; मा १७, ८; २९,१$; का १८,१,९; ३१,१, १$; तै १,३,१४,८;५,५,३;४, ६,१,२;५,१,११,१$; मै १,५, १; ३, १६,२$; काठ १७, १७; ४६,२$; क २८,१; कौ २,८२५; ८७१; जै ४,४, ६; १२,९; आ- (वक्षि)[h] ऋ ५,४३,१०; †आवो- ढम् ऋ २, ४१,९; मा २०,८३; का २२, ८, ४; आ···वोढम्[j] ऋ ८,३५,४-६; आ···वोळ्हम् ऋ ८, ५,१०; ओ(आ-ऊ)हतुः शौ १९, ६८,१०[k]; पै १५,३,१०; ओहिरे ऋ ८, १९, १; ओहिषे ऋ १, १२८, ६; †आ···वक्षति ऋ १, १,[२ ; ४, ८, २]; काठ १२, १५; जै ४, १९, ६ : आ-वक्षत् ऋ १, १५७, ३; १०, २०, १०; खि ४, ९, २; ५, ७, १, ४; काठ १५, १३;†कौ २, १११०; आ···वक्षत् ऋ १, १३५, ४[l]; ३, ५, ९[l] : ८, ३४, ८; खि ५, ५, १; ७, ३, ४; मा १७, ६२[३]; २८, १५[l]; का १८, ५, १३[३]; ३०, २, ४[l]; तै ४, ६, ३, ४[२]; ५,४,६,६[२]. मै २,१०,५[४]:३,३, ८[४]; ४, १३, २; ८[l]; काठ १८, ३[२]; १९, १३[l] : क २८, ३[२] : शौ १, ३१, ३; पै १, २२, ३: ‡[m]आ···वक्षतु कौ २, ११५९: †आ···वक्षतः ऋ १, १६, २[n];

[a]) पपा. ग. अभावः ।

[b]) सपा. आपमं १,१,३ सुव इति पाभे. ।

[c]) °व° इति पाठे? यनि. शोधः (तु. सपा. ऋ.मा. प्रमृ.)।

[d]) वैतु. मा. आ स्वाश्र. इति ।

[e]) पाठे ? आवहतं नः इति शोधः (*°तन्न इति> *°तान इ°>*°तान् इ°> यनि. इति कृत्वात्र नैप्र. पुरस्कृतः लैवि. इति भावः; वैतु. उद्री. सा. GW. GRV. प्रमृ. मपु२ स्थाने मपु१ इति, वें. सा. [पचे] च प्रपु१ इतीव कृत्वा वा. कर्तृत्वेन अग्निरिति पदमाक्षेपुकौ ?) ।

[f]) सपा. शौ ३,१५,२ आहुराणि इति पाभे. ।

[g]) आ- अ° इति पपा. शोधार्हः (तु. शौ पपा., पा ८,१,७१ च) ।

[h]) मपु१ रूपम् ।

[i]) पृ ६६९ c टि. द्र. ।

[j]) वैतु. GW. ग. अभावः ।

[k]) 'तौ भोगाय त्वाम् पुनर् ओहतुः (=प्रत्या-आनिन्तवन्तौ)' इति वा. द्र. (तु. पपा. सात. W.; वैतु. सा. √आह् >आहतुः इति, RW. WI. √ऊह् ओहताम् इति ) ।

[l]) =सपा. तैब्रा ३,६,१३,१ या ९, ४३ । तैब्रा २, ६, १०,३ तु आ···अवाक्षीत् इति पाभे. ।

[m]) पृ ६७८ g टि. द्र. ।

[n]) 'इमा धानाः उप हरी इन्द्रम् आ°' इति वा. कृत्वा इहोप =इह आ उप इति पदत्रयं द्र. (वैतु. पपा. प्रमृ. इह उप इति) ।

८, २, २७; ३४, ९; कौ २, १००८; आ(आ-अ)वाक्षुः शौ १६, ७८, १[a]: आ-वक्षन् ऋ १, १०४,२; आ··वक्षः शौ ११,१, ४; पै १६,८९,४.
ओ(आ-उ)ह्यते मै ३,७,८.
आवाहयामि[b] मै २,९,१.
आ-वह(त>)न्ती- -न्ती ऋ १,४८, ९;११३,१५; ४,१४,३: -न्तीम् ऋ ५, ८०,१.
आ-वाहित- -०त?, -नम् मै २,९, १०.
ϕ‡आ-वोढवे[c] कौ २,५०१, जै ३, ५७,१३.
आ√वा, आवाति पै १९, ४१, १; आवातु ऋ १०, १३७, २[d]; १८६, १: कौ १, १८४: २, ११९०; जै १, १९, १०: ४,२०, ३; आवातु शौ४,१३,२†:आवातु पै ५, १८, ३†; १९, ४६, ७†: आ···वातु पै २०, ३८, ५:
†आ···वाहि ऋ १०, १३७,३; शौ ४, १३, ३: पै ५,१८,४.
?आवाः पै १०,१,५.
?आ वाचीकार- -रः पै १४,२,३[e].
आ√वाश्, आ···वाश्यताम्, आ-(वाश्यताम्) पै ७, ६, ७[f]; आ-वाश्यन्ताम् पै ७,६,७[g].
√आवि, आवयः ऋ ८, ४५,३८[h].
आ√विद्, आ···विड्ढि[i] शौ २. ५, ४[j]; पै २,७,२.
आ-वि√तन्
ϕआवि-तत- -नम् ऋ ९,६७,२३[k].
आ-वित्त- आ√विद्(लाभे) द्र.
आ√विद्, (ज्ञाने)>वेदि, आवेद[l] ऋ १०, ११४, ९.
आवेदयते[m] काठ १५, ७[n]: आ-वेदयति मै ४,४,३: ¶आवेदयति तै ७,१,६,८: मै ३,६,९[o]:४,४, ३ : आवेदयामसि ऋ ४,३६,७; १०, १५१,१: आ···वेदयामसि ऋ ४, ३६,२.
१¶आ-विद्[o]- -विदम् तै ५, १,९, ६; मै १,९,७.
आ-विद्वस्[p]- -द्वान् ऋ ४,१९,१०.
आ-वेद्य पै २, २, १[q].
आ√विद्,(लाभे)>वेविद्, आविदे ऋ ८,४५,३६; आ···विदामि पै २,२९,१-६; आविदामि पै २, १९, १-४.
आविन्दतु खि १,३,५; ?आ[q]··· अविन्दन मै ४, २,६.
• आविविद्रे[r] ऋ ३,५४,४: आ-विदन पै १९, १६, ९[s]. आ-विदम् ऋ २, २७,[१७;२८,११: २९,७]; †आ(आ-अ)विस्मि[t] ऋ १०, ९७, ७; मा १२, ८१: का १३,६,७: तै ४, २, ६, ४: काठ १६, १३: क २५,४: पै ११,६, १०: †आ···अविस्मि ऋ १०, ९५, ३; मा १९, ५६; का २१, ४,७: तै २,६,१२,३; मै ४,१०, ६: काठ२१,१४: शौ१८,१,४५.

a) सपा. पै १९,१६,९ आविदन् इति पाभे. ।
b) ०वाह० इति स्वरे? यनि. शोधः ।
c) गम. तवेनन्ते अनन्तरस्य ग. स्वरः । सपा. ऋ ६, ६०,९ वोढवे इति पाभे. ।
d) यनि. स्वरे? आवातु इति शोधः (तु. सपा. शौ [तु. W.टि.] तैब्रा २,४,१,८ तैआ ४,४२,१, पा ८,१,६५)।
e) पाठे? आ-बाध- [बस.] > 'धी√कृ> धीकार- इति शोधः द्र. ।
f) सपा. शौ ३,१२,३ आ···गमेत्, आ (गमेत्) इति पाभे. ।
g) सपा. शौ ३, १२,३ विशिष्टः पाभे. ।
h) अर्थः व्यु. च ? √भू [प्राप्तौ]> भावि>( नैप्र.) यनि. इति मतम् (तु. सस्थ. टि. ?एवारे)। पृ ४३९ √अव्>आवि>०यः इति शोधार्हं द्र. ।
i) पाधा. 'शब्दे' पठ्यमानः सन्नयं धा. 'मनःप्रीतौ' 'तृप्तौ' वा अदा. उसं. ( वैतु. W. प्रकृतं रूपम्<√अव् [तु. WG९०८] इति वा, <√विष् [तु. WSR.] इति वा, सा.<√वृध् [वर्धने] इति )।
j) पाठे? पृणस्व कुक्षी विड्ढि शक *ध्या ( =ध्या [=धिया] आ) नः इत्येवं द्वितीयः पादः शोधितः स्यात् तदनु 'हे शक ! अस्माकं स्तुत्या प्रीतमनास्तृप्तो वा भव' इति तात्पर्यं द्र. (वैतु. सा. प्रभृ. ना. अन्यथयन्त इव)।
k) तु. सा.: वैतु. मा १९. ४१ प्रभृ. तैब्रा १,४,८,२ च अन्तरा इति द्विस्वरस्य स्थाने अन्तरा इति पाभे.; PW. GW. अन्तर् आ इति द्विस्वरः समाहृत इव सन् आर्चिषि इति मत. युक्तः कप्र. इति ( वैतु. टि. आ···धावते, ϕआ-दधन्वस्-)। l) लटि प्रपु१ रूपम् ।
m) सप्र. माश ५, ३,५,३१ वाचयति इति पाभे. ।
n) उत्तरेण संधिरार्षः । o) भाप. (ख्याति- [तु. भा. ])।
p) गस. उप. वसु( श् ) प्र. उसं. (पा ३,२,१२४ )। पाप्र. [७, १,३६] तु शतुर्वसुर् इति ।
q) शोधितः पाटः (तु. सस्थ. टि. ?कुमारवत्या०)।
r) श>इरेच्>रे प्र. (पा ६,४, ७६)।
s) पृ ६८५ ० टि. द्र. ।

आ-वित्त,त्ता[a]– -त्तः मा १०,९[3]; का ११,४,६[3]; मै २, ६, ९[4]; ४, ४, ३[4]: काठ १५,७[4]: –त्ता मा १०, ९; का ११, ४,६: मै २, ६, ९: ४,४,३: काठ १५, ७; –त्ते मा १०,९: का ११, ४,६; मै २,६, ९; ४, ४, ३; काठ १५, ७: –त्तौ मा १०,९; का ११,४,६; मै २, ६,९: ४,४,३: काठ १५, ७.

२आ-विद्[b]– -विदि तै २,६,९,६: मै ४,१३,९.

३आ-विद्[c]– -विदः काठ १५, ७.

आ-विदे ऋ ७, ३२, १९ϕ; १०, ११३,३.

आ-विन्न, न्ना[a, d]– -न्नः[e], -न्न, -न्ने, न्नौ तै १,८,१२,२.

आ-वेदन– -नम् पै २,४९,१-५.

ϕआ-वेविदान[e]– -नाः ऋ १,७२,४.

१आ-विद्–, °द्वस्– आ √विद्(ज्ञाने) द्र.

आ √वि(<व्य)ध्

आ-विद्ध– -द्धम् ¶तै २, ३,१३, ३; ६,८,३; पै १२, ३,२: –¶द्धस्य काठ २५,४; क ३९,१.

आ-वि √धा, ?आविधात् खि २,६[2], २४.

आ-वि √भा, आ···विभाति[f] ऋ २, ८,४.

?आविर्[g] खि १,९,१.

आ √विवास्, आविवासते ऋ १, ११७,१: †आविवासति ऋ १, १२,९: ८४,⌊९(८,९७,४)⌋; २, २६,३; ६,६०,११; ८,१९,१३; १०, ९३, २; तै २,३,१४,३; मै ४,१४,१०; कौ २,१९६;५००; ६९२; जै ३, १८, ३; ५६, १९; ५७, १२; ४,१२,११; शौ २०, ६३,६; आविवासति ऋ ५,७४, १; ८,६९,१[h]: ९७,⌊(१,८४,९) ४⌋; ९, ४४,४: ८६,१४; मा ६, २३: का ६,६,१: तै १, ३, १२, १; मै १,३,१; काठ ३,९; क २, १६: †कौ १, २६४:३६०: †जै १, २८, २: ३८, १: आ··· विवासति ऋ १, ५८, १: †आविवासतः ऋ ७, ९४, ११ : मा ३३,७६; का ३२, ६, ७; †आविवासन्ति ऋ ३,५१,७: ४,११, ५:८,६०,५; मा ७,३५: का ७, १७, १: तै १,४,१८,१: २, ३, १४,६$: मै १,३,१९: काठ ४, ८: क ३,६: कौ १,४२: जै १, ४,८: पै ५, २, ८; आविवासमि ऋ १, ३१, ५; आविवासमि ऋ १०,६४,५: आविवासथः ऋ १, ११९, ९: †आविवासे ऋ १, ४१,८; ६,५१,८[2];५२,१७;६२, ५; ६६,⌊(१, ६४,१२) ११⌋; ७, ६, २; ८,१६,३; जै ४, २२, ७; शौ २०, ४४, ३; आ···विवासे ऋ ७, ५८, ५; आविवासत्[i] शौ ७, २२, १; पै २०, ५, २; आविवासात् ऋ ७, २०,६; १००, १ ; आ-विवासान् ऋ २, ११, १६ : आ···विवासान् ऋ १, १७३,१; आविवास ऋ ५, ८३, ⌊१: ८, ९६,१२⌋; १०, ६३, ५; †आविवासत,>ता ऋ ८, १५, १: कौ १,३८२; जै १, ४३, २; शौ २०, ६१, ४; ६२, ८ ; आ-विवासेत् ऋ ⌊(३,१४,५) ६,१६, ४६ (१०,७९,२)⌋; ⌊(१, १२८, २) १०, ३१,२(७०, २)⌋; आ-विवासेयम् ऋ २,३३,६; †आ-विवासेम ऋ ६, ३८, ५:६१, २; मै ४,१४,७; काठ ४,१६.

†आ-विवासत्– -सताम् ऋ ७,१०४, २१; शौ ८,४,२१; पै १६,११,१; –सन ऋ १,१५२,६;७,७२,३;९, ३९,५: कौ २,२५२; जै ३,२१, १७; –सन्तः ऋ ५,४५,३;४.

आविवासन्ती– -न्ती ऋ ५,४७, १.

?आ वि विद्वान् द्रवत्[j] ऋ ७,१०,२.

[a]) सपा. तै. शाखायाम् आ-विन्न, न्ना– इति पाभे. । धा. लाभे वृत्तिर् इति मा. ⌊का.⌋ PW. प्रमृ., ज्ञान इति सा. (माश.) उ. म. Gri., सत्तायाम् इति Egg. MW. प्रभृ.।

[b]) भाप. (लाभ-)। [c]) नाप. (मन्त्र-व्याहृति-)।

[d]) वैतु. पपा. नावग्रहः।

[e]) गस. शानजन्तम् उप. प्रकृतिस्वरम्।

[f]) तु. वें. सा. GW.; वैतु. PW. ग. अभावः।

[g]) पाठे? √अव्>आवीत् इति शोधः।

[h]) वैतु. GW. प्रप्र···आ° इति ? (तु. सस्थ. टि. प्रप्र √कृ)। [i]) पाभे. कृते पृ ६३३ o टि. द्र.।

[j]) वा. ? पपा. यनि. चत्वारि पदानि । वें. सा. आ वि···द्रवत् इत्येकं पदं विद्वान् इति चापरं पदमिति, GW. आवि–विद्वान् इत्येकं पदं द्रवत् इति चापरं पदमिति, ORN. आ···विद्वान् इति च वि···द्रवत् इति च पदे इति? । शोध्यः पाठः इति कृत्वा आ आविर् विद्वान् द्रवत् इति चत्वारि पदानीति तु स्वरतोऽर्थतश्च विमृश्यम् । एवं स्थिते 'यज्ञं तन्वाना उशिजो न (=यथा) मन्म (=मन्मानि ⌊आविर् आ-कुर्वन्ति⌋ तथा) अग्निर् देवो विद्वान् दूतो देवयावा वनिष्ठः (सन्) जन्मानि द्रवत् (=द्राग्) आविर् आ (=आ-करोति)' इति वा. द्र. (तु. सस्थ. टि. द्रवत्–)।

**आ-विवृत्सत्-** आ√वृत् द्र.

**आ√विश्,>** वेशि, †आविविश्याः ऋ १०,१०,३; शौ १८,१,३. आविशते शौ ४,३६,८; †आ… विशते ऋ १०,८५,२९; शौ १४,१,२५; पै १८,३,४; आविशति तै ७,१,७,४¶; काठ ७,७¶; शौ ७,८०,४; पै १९,४०,८; †आविशन्ति ऋ ३,४६,४; ६,३६,३; मै २,२,३¶; ४,१४,१८; काठ ७,८¶; ३८,७; पै ९,१२,४$; †आ… विशन्ति ऋ ९,८५,७; ९५,३; कौ १,५४४; जै १,५५,१०; आ… विशन्ति शौ ६,२,२[a]; आविशे शौ ४,३६,७; आविशाति शौ १२,३,४८[b]; आ… विशन् पै २०,४८,८; आविशासि पै १७,४०,७[b]; आविशाथः काठ १७,१९[c]; आ… विशताम् शौ १,२३,२[d]; आविशतु तै ७,३,१३,१; काठ ४३,३; आ… विशतु मा १२,१०५; का १३,७,४; तै ४,२,७,२; ७,३,१३,१$^2$; मै २,७,१४; काठ १६,१४; ४३,३$^2$; क २५,५; पै १५,२,८; आ(विशतु) मा १२,१०५; का १३,७,४; तै ४,२,७,२: काठ १६,१४: क २५,५; पै १५,२,८; आविशतात् खि ४,६,१[e]; ८,३[f]; मा ८,४२; ३४,५०[e]; का ९,६,१: ३३,२,१३[e]; तै ७,१,६,६¶: ७,२; आविशताम् तै ७,३,१३,१; काठ ४३,३; ‡आविशन्ताम् काठ ४४,६[g]; आविशन्तु तै २,४,८,२[h]; ७,३,१३,१$^2$; काठ ११,९[h], ४३,३$^2$: शौ १३,१,१०; पै ७,८,१०: १८,१५,१०: आ… विशन्तु ऋ १,५,७;१५,[१: ८,९२,२२]:४,५०,१०: १०,९६,१;९८,४: मा ८,४२: का ९,६,१: तै ७,१,६,६¶: †कौ १,१९७:२,१०१०; जै १,२१,४†: शौ २,५,४: †२०,१३,१; ३०,१; ६९,५: पै १,१०६,३[i]; २,७,२: १९,१,६[a]; आ (विशन्तु) पै १,१०६,३[i]: आविशस्व मा १७,८७: का १९,१,१: तै ५,५,१०,६;७,२,५[j]; काठ ४०,६; आविश,> शा ऋ १,९१,[११(१३९,६)]; १७६,[१; ९,२,१]; ८,४८,१५; ९,८,७;२५,२[k]; ६३,[२३; ६४,२७]; ६५,२; ७०,[९; १०८,१६]; ७६,३: ९६,२१: ९७,३६; १०,८५,४३; मा ३,२२:४,२७; ६,११: का ३,३,१३; ४,९,३: ६,२,६;९,२,७[l]: तै १,२,७,१: ६,२,२; ३;१०,६$^2$; ३,२,५,१:६,१,११,१; ७,१,७,३[m]: मै १,२,६:१५:३,७,८:९,७:४,१०,१†; काठ २,६: १४†: ३,६: ४,९[l]: १४$^2$: ७,१२: १३,१५[l]: २४,६; २८,४[l,n]: ३१,१५$^2$: ३८,१२: क १,१९: २,१३:३,७[l]: ३७,७; ४४,४[l]: †कौ २,२११: २५५: ३८७:५३४:५८०:५८६:†जै ३,१९,६: २१,२०: ३१,७: ४१,१०:४७,६:४८,२: शौ ७,११५,३: १४,२,४०†; पै १६,७०,९; १८,१०,८; आ… विश ऋ ९,६५,१४ : ६६,१५: ९०, ३३ :

आविट् वि°>°विवृवि°>°विवि° इत्येवं पाठे वावि. द्र.।

a) सपा. °शन्ति<>°शन्तु इति पाभे.।

b) सपा. °शाति<>°शासि इति पाभे.।

c) सपा. मा १९,७ का २१,१,६ माश १२,७,३,१४ आविशन्ती इति, मै २,३,८ ऐब्रा ८,८ आविशन्तौ इति, काठ ३७,१८ तैब्रा १,४,२,२: २,६,१,४ आपश्रौ १९,३,४ आविशन् इति च पाभे.।

d) सपा. पै १,१६,२ तैब्रा २,४,४,१ आ… अश्नुताम् इति पाभे.।

e) =सपा. आपमं २,८,१। हिगृ १,१०,६ तु आविशताम् इति पाभे.।

f) =सपा. आपमं. २,४,६ हिगृ १,१०,४। तैआ १०,४१,१ मना २,४२ हिगृ १,८,४ तु जुषताम् इति, मागृ १,२२,११ आविशताम् इति च पाभे.।

g) पाभे. क्रने पृ ६९५ *b* टि. द्र.।

h) सपा. °शन्तु<>°शत इति पाभे.।

i) सपा. शौ ६,५५,२ आ… भजत,आ(भजन)इति पाभे.।

j) सपा. °शस्व (तैब्रा २,४,८,७ मंब्रा २,१,१३ माश्रौ १,६,४,२५ शांगृ ३,८,३ पागृ ३,१,४ च)<>°श (आश्रौ २,९,१० च)<>कौसू ७४,१९ आविवेश इति पाभे.।

k) पाभे. क्रने पृ ६९६ *m* टि. द्र.।

l) सपा. °श<>°शत (माश ४,३,४,२० शांश्रौ ७,१८,९ च) इति पाभे.।

m) सपा. मा १०,२६$^3$ का ११,८,१$^3$ तै १,८,१६,१ मै २,६,१२$^2$; ७,१६$^2$; ४,४,६$^2$ काठ १५,८$^2$;३८,४$^2$ माश ५,४,४,४ तैब्रा १,७,१०,२;२,६,५,१ आपश्रौ १८,१८,७ आसीद इति, लाश्रौ ३,१२,१३ आसदम् इति च पाभे.।

n) प्र…आ° इति Sl. चिन्त्यः।

तै१,५,६,२: मै १,५.२; काठ ७, १[a];७: क ५,१; कौ २, ५५९‡[b]: जै ३,४४,५‡[b]: आ(विश) तै १, ५,६, २[२]: मै १,५, २[३]: ३; काठ ७, १[३]: ७[३]: क ५,१[२]: **आविशत** मा ४,१३:७,४६[c]: का ४, ५,५: तै १, ३,८,१[c];४,४३,२[c]: ५,६, ३: ६, ३,८,२[c]:६,१,४[c]: मै १, ३,३७[c]:५,३;१०; २. ४,७[d];८; ४, ८,२[c]: काठ ७,१: ८: क ५, १: शौ १९, १९. १-११: पै ८, १७, १-११: आ(आ-अ)**विशत** ऋ १,१४१,५: २,१३,१: काठ ९, ९[e]: १२[e]: क ८, १२[e]. पै १६, १०९, ५[f]: १९, ४३, ८: †आ(आ-अ)विशत् ऋ ९,, २८, ५[g]: कौ २, ६२७: जै ३,५२,९; आ···**अविशत्** शौ १२, १,५५: पै १७, ६, ३: आ(आ-अ)**विशन्** शौ ११, १०, १३; १८; २९: पै १६,८६,३;८:८७,१०: **आविशः** पै १९,,४३,७.

**आविवेश** ऋ ६,७४,२: ८, ४८, ∟(४,५८,३)१२⌋;१०,१६,६: मा ८,३६,९,,५: १८,३०; २३,५०: का ८,११,१:१०,२,१: २०,१, १: २५,९,६: तै १,७,७,१: ८. २२,५†: ५,५,९,३: ७,९,१: मै १,६, १; ११, १: २,१३, १३[३]; ४,११,२†: काठ ७,१२: १३[h]: १४[३]: ४०,५: शौ १,१२,३; ३, २१,१: २: ७,४३, १†: ९२,१: १२,१, २४: २,३३; १६, १,८: १८,३,५५†: १९,,३,३; ५९,२: **आविवेश** ऋ १, ९८, २: १६४, २१:३२: ३,३,४; ७,४; ३१,५: ३४,५:६१,∟७: १०,८०,२⌋: ४, ५८,∟३-(८,४८, १२)⌋: ५,४७, ३: ७,९, ३: ८, १०१, १४: ९, ९६, २०: २२: १०,८१,१:९८, ३:११४, ४: १२५, ६[l]: १३०, ५: मा ८,२४: †१७, १७:६०: ९१: १८, ७३: २३, ५१: ५२: का ९,४, २: †१८, २, २: ५, ११: १९, १, ५†: २०. ५, ६: २५. ९, ७: ८: तै १, ४, ४५, १: ५, ११, १† : †४, ६, २, १: ३, ४; मै १. ३, ३९; †२, १०, २; ५: १३, ११ : शौ ३, २९. ७[e]: ४, ११, १;३०,५†[1]: ३४, ५[j];५,१,२: ७, ८७,४‡[k]: †९,, १४,२२;१५,१०: १०,२, ३३;७,३५:†८,३:४०: १२, २, ४३[1];१३,१,२४:१८,१,२७‡[k]: २०, ११, ५†: **आविवेशाँ३**[m] मा २३, ४९: का २५, ९, ५: **आविवेश,>शा** †काठ ४,१३[२]; १६; ११,१२[n]; १३, १४$:१७, १९[४]$:१८,१:३: २९,३$: ४०, ३[२];७; क ३, ११[२]: ६,२: ३[३n]; †२८,२;३:४५,४: पै १,१७,३; ३०, ६[c]:१०९,१: ३,१२,१:२; २५,१: ५,६,४;६,२,२: ८,१३, ३†: १३,५,५: १५,२, ५: १६, ६२,५: ६७,१२†: ६९,१: ७२, १०: १०१,६†: १७,३,५: १०, ७:३३,४: १८,१७,४: १९,,४७, ५†: २०,१,७: १०,४: १९,२; ३२,६: **आविविशुः** तै ४, २, ६, ४‡[o]: मै २,७,१३‡[o]: काठ १६, १३‡[o]: क २५,४‡[o]: शौ २,३१, ५: १८, २,४९:३, ५९: आ··· **विविशुः** ऋ ३, ७, १: ५,१९, २; **आविवेशुः** ऋ ४,२३,९: †**आविवेशिथ** ऋ ९, २०, ५: कौ २, ३२२: जै ३, २६, ८: **आवेशीत्** ऋ ८,६०,२०.

**आवेशयामि** मै ३, १६,४[p]: काठ २२,१४[p]: शौ ७,५५,३:१२,३, २२: १८, ४,४८: पै १५, १,६, १९,३०,५; २०, १०,६: **आवेशयामहे** शौ ६, १०८,५: पै १९, ३४, ९: **आवेशयामः** तै ४, ४, १२, २[p]; **आवेशयामसि** शौ ६,

a) विश्वरूपा इति पाठे? °पा (पा-आ) इति पाठशोधः।

b) सपा. ऋ ९,५०,५ विशिष्टः पाभे.।

c) पृ ७०९ l टि. द्र.। d) पृ ७०९ i टि. द्र.।

e) सपा. °विशत (तां १, ८,१७ च)<>°विवेश<>आविश तैब्रा २, २, ५,६ तैआ ३, १०, २;४ आश्रौ ५,१३,१५ आपश्रौ १४,११,२ इति पाभे.।

f) सपा. शौ १०,१०,२५ अविशत् इति पाभे.।

g) आ-अ° इति पपा. शोधार्हः (तु. कौ. पपा., पा ८, १,७१ च)।

h) सपा. शौ १९,३,२ विशिष्टः पाभे.।

i) पृ ६७० l टि. द्र.।

j) सपा. पै ६, २२,५ आससाद इति पाभे.।

k) पृ. ६३८ i टि. द्र.।

l) सपा. पै १७, ३४,४ प्रविवेश इति पाभे.।

m) अनुदात्तः प्लुतः, सपा. अनुनासिकत्वं च (पा ८,२, १००; ४,५७)।

n) तु. सस्थ. टि. अनु।

o) सपा. ऋ १०,९७,१२ शौ ४,९,४ विशिष्टः पाभे.।

p) सपा. °शयामि<>°शयामः<>°शयानि आश्रौ ४,१२,२ इति पाभे.।

१०८, ३; पै २०,१९, ८; आवेशयन्तु शौ १८, २, २६; आवेशय,>या ऋ १, १७६, २; शौ २, २५, ४; १३, १, २; पै ४, १३, ५; ७, ६, १०; १८, १५,२.

आविवेशीः ऋ ३,३२,१०.

आ-विशत्– -†शन् ऋ ५,२५,४;७, ५५,[१; ८,१५,१३; ९,२५,४]; ९,२८,२; ५६,२; ६०,[३; ८६, १९]; ६२, १९; ८६, २३; काठ ३७,१८$[a]; मै १,५,१३; कौ १, ४८९;५५९; २,१७१;६३१; जै १,५१,३:५७,६; ३,१६,९;५१, ९: शौ १८,४,५८; पै २०,२२, २; –शन्तौ मै २,३,८[a];९,१०.

आविशन्ती– -न्ती मा १९,७[a]: का २१,१,६[a].

आ-विशम् ऋ २,२४,६.

आ-विष्ट– -ष्टः क ४८, १३; शौ ३, २१,२: ६,८५, १; १०,३,५: पै ३,१२,२;१९,६,१; ‡ष्टाः[b] काठ २२,१०; क ३५,४.

आ-वेशयत्– -यन्तः शौ ४,३०,२‡[c].

आवेशयन्ती– -न्ती तै ३, ५, १, १. शौ ७, ८४,३; पै १, १०३, १; १९, २८, १०; –न्तीम् ऋ १०,१२५,३[c].

आ-वेशित– -तम् खि ५,२२,५: शौ २०,१३६, ९.

?आ-वेशि(न>)नी– -नीः पै ३,३७, १[२].

आ√विष्ट्

आ-विष्टित,ता– -तः ऋ १०,५१,१; –तम् तै ३.४,१,४¶[d]; –ता शौ ५,१८,३; पै ९,१७,१०; –तानि शौ ५,२८,१[e]; पै २,५९,१०.

आविस्(ऱ्,ष्)*[f] -विः ऋ १, ३१, ३: ८६, ९; ११६, १२; १२३, ६; १०; ११; १२४, ४; १३१, ३[g]: १४३, २; १४६,[४; ४, ३, ११; १०, ८८,२]; २, १५, ७[h]; २३, १४; ३, ३४, ३; ५५, १५: ४, १,१६;४,५;१६,८; ५, १,९: २,९;८३, ३: ६, १७, ३; ४८, १५; ६४, २: ७, ५८, ५; ७६,१;१०३,८; ८,८,२३: १४, ८[i]; ४७,१३: ९, ३, ५: ७९,५, ९५,२; १०, २७,२४; ४८, १०; ५४,५;६८,६;७१, १: ९६, ११; १०७, १; खि १, १२, ७: मा १०,९; १३,१३†:१८,६०:३२, २६†; का ११, ४, ६; १४, १, १३†; २०, ४, ३; ३२,२,९†; तै †१, २,१४,२;७: २,१,१०, ३; ५,७,७,२; मै १,८,६;९,७; २,७,१५†; १२,४[२]: ३, ९, ४[२]: ४,१,९; काठ २. १५†: ६, ७[२]; ८,१०: १६, १५†: २६,१:६[२]: २९,,८; ३१, ७: ४०,१३: क ४, ६[२]: ७,७: २५,६†: ४०.४:४१, ४[२]: ४७, ७: †कौ १, ४३५: २, ६०९; ९९१: ३, ३, ५: †जै १,४२,९: २, १, ७: ३, ४९, ८: शौ ४, २०, ५: ६, १२३, २:७, ११३,१: ८, ३,२४†: १०.८,६: १२,१,६०:४,२९:३०:†२०,८, १;११,३;१६,६: २८,२;३२,१: ३९, ३; ७७, ८: पै ८, ६. ११: १६, ८,३†; १७. ६,९: १८.९: १०.

¶आविः-पृष्ठ[j]– -ष्ठः मै १, १०, ७: काठ ३६,१.

आविः,ष्√कृ, आविःकुर्वीत[k] मै ३, ६,७¶.

आविष्-कृ (गवन्>) ण्वती– -तीम् ऋ ७, ८०, १[l].

आविष्-कृण्वान,ना– -नः ऋ ४.

---

a) पृ ७०९ c टि. द्र. ।

b) =सपा. माश्रौ ६, २, ६,२६ । तै ४, २, ६,५; ५, ५, ७, ५ तु प्रविष्टाः इति, ऋ १०, ९७, ९९ मा १२, ९३ ऐब्रा ८, २७ तैब्रा ३, १२, ६, ३ मंब्रा २, ८, ४ विष्ठिताः इति, शौ ३,९,६ विष्ठिता इति च पाभे. ।

c) सपा. °यन्तः<>°यन्तीम् इति पाभे. ।

d) सपा. काठ १३,१० आवेष्टितम् इति पाभे. ।

e) सत्स्वपि भूयिष्ठेषु मूको. °ष्ठिता° इति मन्यमानः शंपा. चिन्त्यः ।

f) (सामान्यतः) अव्य. (पा १,१,३७), (कृद्-योग एव विशेषतः) गतिः (पा १,४,६१)। व्यु. ? आ√*विष् (स्) [दीप्तौ (=√विद् [*दर्शने (तु. Lat.√*vidēre, vis*)]] +(भावे)क्विप् (तु. या [८, १५] PW. च; वैतु. शक., नाच. <आ√अव् [दीप्तौ] इति)। गस. प्रकृति-स्वरः। क्रिवि. इति कृत्वा प्रयुक्तं सद् अव्य. इत्युक्तं भवति ।

g) वैतु. सा. GW. प्रभृ. आविष्करिक्रत् इति ।

h) वैतु. सा. आविर्भवन् इति ।

i) वैतु. सा. GW. प्रभृ. च आविष्कृण्वन् इति ।

j) विप. (पुरोडाश-)। बस. पूप. प्रकृतिस्वरम् ।

k) अयमेवैकः आविर्गतिकप् तिङ् दृष्टो भवति अतः पाठस्य प्रामाण्यं? (तु. मै ३,९,४ आविः कुर्यात् इति) ।

l) वैतु. आविष्कृण्वत्– [ऋ ८,१४,८] यत्र 'समानेऽर्थे द्वैस्वर्यात् पृथक्पदत्वं विमृश्यम् ।

१७,३; –ना ऋ ५, ८०, ४: ७, ७५,१.

आवि॒ष्-कृत– -तम् मै ३,८,७¶.

?आ॒विष्कृत-द॒त्[a]– -दता मै ३,६,७¶.

आवि॒र्-ऋजीक[b]– -कः ऋ ४,३८,४.

आविर्√भू

आवि॒र्-भूत– -तम् मै १,९,७¶.

¶आविर्-भूति– -त्यै काठ ८,९: क ७,५.

आविर्-भू॒य[c]– -यम् मै १, ८, ६¶.

†आवि॒(स्-त्य>)ष्ट्य[d]– -ष्ट्यः ऋ १, ९५,५; मै ४, १४,८; पै ८, १४,५; –ष्ट्यम् ऋ १०,१००,७.

आविः-सू॒र्यं[e]– -र्यै मै ४,५,१¶.

आ√वी[f],>वेवी, आ॒···वे॒ति ऋ ६, १५, १: †आ॒···वयति ऋ ८, २१, १०; शौ २०, १४, ४; ६२, ४: आ॒-वयत् मा २१, ४४;४५: का २३, ५, ३[?]: काठ १८,२१[?]: आ॒···वे॒: ऋ १, ६३, २[g]: आ॒···वेनु ऋ १०,३१,१[h]: आ···व्यन्तु पै १९, ४८, ९: आ॒···अव्यन ऋ ३, ८९,१.

आविवा॒य ऋ १०, १०७, ५: आ॒···विवाय ऋ १, ७१, ४; †आ॒···विवा॒य ऋ १, १५६, ५; १०,६,२: मै ४,१४,१५.

आ॒वेवीरन् तै ३,२,९,५¶.

आ-वीत॒– आ√व्ये द्र.

आ√वृ(वरणे), आवृणीते पै १०, ६, १: †आ॒वृणे ऋ १, १७, १; ३, १२,५;३७,९;७,५९,११; तै १, ६, १२, १ : २, ५, १२, २ ; मै ४,१०, ३; ११, १:१२,२; काठ ८,१६: १२, १४; २०, १५; कौ २,९२५;१०५३; जै ४, २२, ८; शौ २०, २०, २; ५७,५; आ॒··· वृणे ऋ ३,३३,११: ८,३८,⌊१० (९४, ८)⌋: मा १७, ७४[i]; का १८, ६, १०; तै ४, ६,५,४; मै २,१०,६; काठ १८,४; क २८, ४: शौ ७, १६, १: †आवृणीम॒हे ऋ ६,१५,९: ८,८३,४: कौ २, ९१९: जै ४, १६, २ : †आ॒-वृणीमहे ऋ १,११४,४: २,२६, ⌊२: १०,३५,२⌋: ४१, १९; ८, १४,⌊६: ९,६१,४: ६५,९(१०, १३३,६)⌋: २६, ⌊२१; ६७, ४⌋; ७७,२२; ८३, १; ९०, २; १०, ३५,१;३६,११: खि ५, १, ५; ३,७; मा २७,३४; का २९, ३, १०; तै २,६,१०,२;३; मै ४, १३, १०; काठ ११, १२; ४०, ११; कौ १, १३८; २, १३७; ८४३: जै १,१५,४;३,१३,१३; ४, १८, १०; शौ २०, २७, ६; १०४, ४; आ॒···वृणीम॒हे ऋ ३, २,४; ८, ३१,⌊(१८,१६) १०⌋; †आ॒···वृणीमहे ऋ १, ३९,⌊७; ४२, ५⌋; १३९,१: ५, ८२, ७; ७, ९७, २; ८, १८, ⌊१६(३१, १०)⌋; ९,६५, २८; १०, ३१, १[j]; १००, ⌊१-११⌋; तै ३, ४, ११,२: मै ४, १२, ६; कौ १, ४२०; ४६१, २, ४८७; ४९८; जै १, ४१, २; ४८, ७; ५२, २; ३,३७,२; †आ॒(वृणीमहे) ऋ ८,१८,१६;३१,१०;९,६५,२८; २९[?]; ३०[?k]; कौ २, ४८७; ४८८[?]; ४८९[k]; जै ३, ३७, २; ३[?]; ४[?k]; आ-व॒रत् ऋ १,१४३, ६; आ-व॒रः ऋ ८, १३,२१;१९, ३०[l]; काठ १२, १४†[l]; पै १४, २,१४?[m]; आ॒···अवृणीत ऋ १, ११९, ५[n].

आ॒···अव्रि[o] ऋ ४,५५,५.

---

[a]) शोधितः पाठः (तु. पृ २२५ *j* टि.)। विप. (दीक्षित-)। बस. पूप. प्रकृतिस्वरम् ।

[b]) विप. (दधिक्रा-)। बस. पूंप. प्रकृतिस्वरम् ।

[c]) गस. भावे क्यबन्तम् उप. प्रकृतिस्वरम् ।

[d]) विप. (अग्नि-, देवहेडन-)। त्यप् प्र. (पावा ४, २, १०४)। या ⌊८,१५⌋ तु आविष+त्य-(<√तन् कर्तरि प्र.) >षस. इति ।

[e]) अस. अन्तोदात्तः । वा. क्रिवि. ।

[f]) बधा. । धा. गतौ ⌊तु. निघ २, ८⌋, खादने प्रभृ. वृत्तिः द्र. ।

[g]) प्रकरणतः धा. योजने वृत्तिः (तु. ऋ १०, १०५,२, वें. सा. प्रभृ. GRV. PG २, ७५; १५७; वैतु. स्क. ⌊पक्षे⌋<आ√विद् ⌊ज्ञाने⌋ इति)।

[h]) तु. सस्थ. टि. उप ।

[i]) सपा. पै २०, ३,४ मनामहे इति पाभे. ।

[j]) वैतु. GW. ग. अभावः इति ।

[k]) आ इत्यस्याऽवशिष्टे द्वे श्रुती कप्र. सत्यौ यद्र. ।

[l]) पृ ४३९ *b* टि. द्र. ।

[m]) सपा. नी २, ११ आभरः ⌊तु. BC.; वैतु. वैप ३, १३९ °भर⌋ इति पाभे., मा १६, १३ का १७, १,१३ तै ४,५,१,४ मै २,९,२ काठ १७,११ क २७,१ आग्र २, ३,६ हिग्र १,१६,१८ सुमना भव इति च विशिष्टः पाभे. ।

[n]) वैतु. स्क. सा. PW. GW. GRV. प्रभृ. आ··· जभ्रुषी इति ।

[o]) उपु१ लुङि रूपम् ।

आ(आ-अ)वरीवुः[a] ऋ १०,५१,६.
आ-वृणान– -नः ऋ ४, १, २०; मा ३३, १६†; का ३२, १, १६†; मै ४, १२, ३?[b]; शौ १९, ४२; ३?[b]; –नाः काठ ८, १६?[b].
आ√वृ (आच्छादने), आ···वव्रे ऋ ३, ३८,८[c].
आ-वृत,ता– -तः ऋ १, ८७, ४;८, २६,१३; मा १९,७६; का २१, ५,३; मै ३,११,६; ¶काठ २३, ३; ३८, १; क ३५, ९¶; शौ १०, २, ३१; १३, ४,२;७; ९: १७,१,२७[d]; पै ९, ७, १; १६, ६२, ३; –तम् ऋ १, ५१, २[e]; १६४,१४;३,३,५; ८,८८,२; मै ३, १६, ३‡[f]: काठ ७, १२†; की २, ३६†; जै ३,४, ७†; शौ ९,१४,१४†; १०,८,४३; ११, ११,४; १२,१,८; †२०,९,२; ४९, ५; पै १०,१२, १२; १६, ६७,४†;१७,१,९; –ता शौ ९, ३,१७; १२,१,५२;५,२: ७,१; १०, ७; पै १६,४०,७;१४०,२: १४२,१; १४६,३: १७,५, १०; –ताः खि ३,१५,२२: मा ४०, ३; का ४०, १, ३: शौ १०,१, ३०[g]; –ताम् शौ १०, २, २९: पै ६,७,१; १६,६२,२: –तामः ऋ १,५५,८.
आ√वृज्, आवृर्जते ऋ १,३३,१.
आवृञ्जे तै ७, ३,११,२: ३: काठ ४३, १[i]: आऽवृक्षम ऋ १०, १४९,५[h].
आ···अवृक्त[i] ऋ ८, १०१,१६.
आ-वृक्षि ऋ १, २७,१३[j]: तै १, ६-७,६,१.
आ√वृत्, >वर्ति, आवर्तते ¶तै ३, २,९,७; ५,२,१,२[k];६,३,८,३, मै ३, २,४[2]¶; शौ १२, २,५२; पै १७,३८,११; आ···वर्तते ऋ ४, ४३, ५[l]; आ···वर्तते ऋ ५, ७७,३: खि ४,२,१; मा३४,३२; का ३३, २, १; शौ १९,४७,१; पै ६,२०,१; ¶आवर्तन्ते तै ५, २,५,४;४,१,४: काठ ३४, ७; आ···वर्तन्ते ऋ १०, ११७, ५; आवर्ते[m] मा २,२६:२७; का २, ६,५,७: आ···वर्ते ऋ १०, १०१, ९: आवर्तस्व मा १२, १०३[n]; का १३, ७, २[n]; तै २, ६,६,२[o]: ५,४,९,१[o]; ६,२, ८, ५[o]; आवर्तध्वम् खि ४, ५, २८; ¶आ (आ-अ)वर्तत तै ५,७,१०, १: काठ ३२, ५; आवर्तन्त काठ ९,१५¶.
†आ[p]···वर्त[q] ऋ १, १६५, १४: मै ४,११,३: काठ ९,१८.

a) लुङि मपु३ (तु. वें. सा. GG.; वैतु. PW.WAG ⌊१,२४१γ⌋ MVG६४ प्रमृ. <*आवरीवरुः⌊<आ√वृ आच्छादने⌋ इति, ORN. <*आवरीवृतुः⌊<आ√वृत⌋ इति (तु. तै ५,३,१,३)। वस्तुतः प्रकृतं रूपं नैप्र. <*आवरीवुः इति। यत्तु सा. PW. प्रमृ. चेह अन्वा √वृ इत्यस्य वृत्तमित्याहुस्तन्न (तु. टि. सस्थ. अनु)।
b) पाठे? √वृ>वृणान–> –नाः इति शोधः (तु. सस्थ. टि. प्र√भृ > ?प्रभरे इति, ?मनीषामा इति, √गृ>गृणान–> -नाः ⌊तै १,६,१२,३?⌋ इति च)।
c) 'यथा योषा जनिमानि (=शावकान्) अपि-वव्रे (=आत्मन्यन्तर् आच्छादयति) तथा सविता रोदसी (आत्मन्यन्तर्) आ-वव्रे' इति वा. (तु. ऋ १०, १८, ११, सा. ORN.; वैतु. GW. अपि···आ···वव्रे इति)।
d) सपा. शौ १७,१,२८ तैआ २,१९,१ परीवृतः इति पाभे.। e) वैतु. सा.<आ√वृ (वरणे) इति।
f) सपा. ऋ ६, ४७,२७ आ-भृतम् इति पाभे.।
g) तु. WI.; वैतु. पपा. °ता इति। सपा. पै १६,३८,२ आभृताः इति पाभे.।
h) धा. बलवद्ग्रहणे वृत्तिः (तु. PW.GW. ORN. च; वैतु.वें.भा. प्रकृतं रूपम्<आ√व्रश्च इति)। सपा. पै २, ४१,५ मुष्णामि इति, आपमं १,१६,५ आविल्शि इति च पाभे.।
i) तु. GW.: वैतु. वें. सा. परि···आ···अवृक्त इति कर्मप्रवचनीयतयैव परेः स्वन्वयात्।
j) 'ज्यायसः (द्वि३ ⌊=युष्मान् देवान्⌋) शंसम् (=णमुलन्तम्) मा (युष्माभिः स्वतोऽहम्) आवृक्षि (=सर्वथा पृथक् कारि)' इति कृत्वा प्रकृतस्य धा. पृथक्कृतौ वृत्तिः स्यात्? (तु. भा. सा. K.⌊तै.⌋ द. GW. GRV. ORN. च: वैतु. वें. सा. आ इत्यस्य शंसम् इत्यनेनाऽन्यथा संबन्ध इति कृत्वा वृक्षि<√व्रश्च् इति, भा.⌊पत्ते⌋ स्क. प्रकृतं रूपम् =मपु३ इति, LR. <आ√व्रश्च् इति)।
k) सपा. मै ३,२,१ अभ्यावर्तते इति, काठ १९,११ क ३१,१ पर्यावर्तते इति च पाभे.।
l) तु. वें.; वैतु. पृ. ३२१ f टि. यत्र वें. इति निर्देशो नेष्टः। m) तु. सस्थ. टि. अनु (परि.)।
n) तु. सस्थ. टि. अभि। o) तु. सस्थ. टि. उप।
p) आ+उ इति नि. समाहारः।
q) लोटि मपु३ त>तप् द.।

आववर्नीति ऋ ५, ७३, ७; आव-
वर्तीति ऋ १०, ६४, ९[a]; आ···
ववर्तति ऋ ८, ८८, ४; आ···
ववर्तति ऋ ८, १०३, ११; आ-
ववर्तत् ऋ २,३४,१४;७,८५,४;
†आ-ववर्तत् ऋ४,२४,१;४४,३;
शौ २०, १४३, ३; †आ···वव-
र्तत्[b] ऋ ८,९७,१३; शौ२०,५५,
१;आ···आ-ववर्तत्[c] ऋ ६,६८,
१; आववृत्स्व ऋ २,१६,८[a]; ३,
३२,५;६१,३; ४,१,२; ३[a]; ६,
१९, ३[a]; १०, ८३, ६[a]; ९८,२;
मा १२,७०[a,d]; का १३,५,९[a,d];
काठ २६,११†; शौ ४, ३२,६†;
पै ४,३२,६†; आववृ (द्) ध्वम्[e]
ऋ ८,२०,१८; आ···ववृत्तन ऋ
५,६१,१६; आ···ववृतीत ऋ ७,
६८, ४; †आ···ववृत्यात् ऋ १,
१०७,१; ६,१७,१३;३८,२; मा
८, ४; ३३, ६८; का ८,१, ३;
३२, ५, १४; तै १, ४,२२, १;
२,१,११,४; मै १,३,२६; काठ
४,१०; क ३, ८; आ···ववृत्युः
ऋ १,१३५,५[f]; १०,२६,८; कौ
१, ३४०‡[g]; जै १, ३५, ९‡[g];
आववृत्याः ऋ १०, ७३, ३;
आ···ववृत्याः ऋ १,१७३,१३;
६, ११, १; ५०, ९; ७,४२, ३;
आ···ववृतीय ऋ १,१८०,५?[h];
७,९३, ६; †आ···ववृत्याम् ऋ
१,५२,⌊१; १६८,१⌋; १५२,⌊७
(७,६५,४)⌋; ३,३२,१३;५,४९,
१; ७,३६,४;८४,१; मै ४,१४,
१२; कौ १,३७७; जै १,३९,८;
आ[i]···ववृत्याम् ऋ ८, ७, ३३;
†आ[i]···ववृत्याम्[n] ऋ १०,१०,
१; खि ३, १३, १; शौ १८,१,
१ ; आ[i]···ववृतीमहि ऋ १,
१३८,४; आ···ववृत्याम ऋ ७,
२७,५.
‡आवावृते[j] कौ १, ४२३; जै १,
४१,५; †आ-ववर्त ऋ १,१६५,
२; मै ४, ११,३; काठ ९, १८;
आ···ववर्त ऋ ६, ६३, १; कौ
१, ४६०‡[h]; जै १, ४८, ४‡[h];
आवृत्सत[k] मै १,२,९[l]; आ···
अवृत्सत ऋ ८,१,२९.
¶आवर्तयति तै ३, ४,१, २; मै
४, १, १; २,३; काठ १३, १०;
१९, १; क २९, ८; †आवर्त-
यन्ति ऋ ८, ६९, १७; शौ २०,
९२, १४; ¶आवर्तयन्ति मै २,
४, ८; आवर्तयामि खि ३, १५,
१५;३०; †आवर्तयामसि ऋ ३,
३७,१; १०, ५८,⌊१-१२⌋; खि
३, १५, ३१; मा १८, ६८; का
२०, ५,१; काठ १३, ९‡[m]; शौ
७, १२, ४; २०, १९,१; पै १,
८४,१-१०; ६,६, ९[n]; १९,३४,
५$; †आ···वर्तयामसि ऋ ८,
६८,१; कौ १,३५४; २,११२१;
जै १, ३७, ३; आवर्तयासि मा
२३,७; का २५,३,३; तै ७, ४,
२०, १; मै ३, १२, १८; काठ
४४,९; आवर्तयतु मा ४,२०; का
४,६,५; तै १,२,४,२; ६,१,७,
७; मै १, २,४; ३, ७,६[२]; काठ
२,५;२४,३; क १, १७; ३७,४;
पै २०, ३६, ९; आवर्तयन्तु पै
२०, २८, ८; आ···वर्तयन्तु ऋ
७,४८,१;७१,३; आवर्तय ऋ ४,
३२,१५; तै ३, ३,१०, १‡[m];

a) तु. सस्थ. टि. अभि ।

b) सपा. °वर्तत (तैब्रा २, ५, ८, ९ च) <> °वर्त इति पाभे. ।

c) ग. द्विरुक्तिगदरार्था द्र. (वैतु. सा. प्रथमे श्रवण आ वाच्य. सन् उद्यत– इत्येतेन युक्त इति)।

d) तु. मा.⌊का.⌋; वैतु. उ. =आवर्तताम् (पुरुषव्यत्ययः) इति वदन् (तु. सस्थ. टि. सीता–>–०ते)।

e) इलौ लोटि मपु३ द्र. । पाठे? मध्यतो दकारो लुप्तः द्र. (तु. GW.ORN.; वैतु. सा. उप···आ° इति द्व्युपसृष्टं सत्⌊तु. PW.⌋ प्रकृतं रूपम् <आ√वृ ⌊संभजने क्रया°⌋ इति कृत्वा वा. उत्लीङ्कः ⌊प्रथमः आ अतः इति पं. युक्तः कप्र. अपि सन् न, तथेत्यभिसंधाय नः इति द्वि. युक्त इति वदतस्तस्य उपावृ° इति सकर्मकस्य सतः क्विप. कर्ममाका-ङ्क्षत्वापत्तेः ?⌋)।

f) तु. सस्थ. टि. उप ।

g) सपा. °वृत्युः <> °वृत्याम् इति पाभे. ।

h) पाठे? आ√वृध्> °धीय इति शोधः । 'गोः (स्तुतेः) ओहेन (आवर्धकेन=प्राचुर्येण) त्वां दानाय' इति वा. द्र. (तु. सस्थ. टि. ओह-)।

i) आ+उ इति नि समाहारः ।

j) सपा. ऋ १,८४,४ आवावृधे इति पाभे. ।

k) तु. Sch.; वैतु. मात. अवृत्सत इति पाठः? ।

l) सपा. शांब्रा ९, ४ शांश्रौ ५, १३, ३ अप···अवृ° इति, तैब्रा ३, ७, ७,१४ आपश्रौ ११, ७,२ अप···वर्तय इति च पाभे. ।

m) सपा. ऋ १०,१९,८ निवर्तय इति, तै ३, ३,१०,१ आपमं २,२२,७ आवर्तय इति च पाभे. ।

n) ते(<युष्मद्-)> तय् आवर्त° इति विमृश्यम् (तु. सपा. ऋ १०,५८,१-१२ यत्र त आवर्त° इति पाभे.)।

